श्रीः

श्रीमुद्दुसुब्बकविविरचितम्

# संक्षिप्तरामायणम्

By Muddu Subba Kavi father of Lakshmana Suri

नाम

काव्यम्

तत्पुत्रेण

श्रीलक्ष्मणसूरिणा

तञ्जानगराधिष्ठितायां

"पूर्णचन्द्रोदयाख्यमुद्राक्षरशालायां"

मुद्रितम्

सत्

विजयतेतराम्

---



1901.

श्रीः

श्रीमुद्दुसूब्बकविविरचितम्

# संक्षिप्तरामायणम्

नाम

काव्यम्

तत्पुत्रेण

श्रीलक्ष्मणसूरिणा

तञ्जानगराधिष्ठिताया।

"पूर्णचन्द्रोदयाख्यमुद्राक्षरशालायां"

मुद्रितम्

सत्

विजयतेतराम्

---



1901.

॥ श्रीः ॥

श्रीमुकुन्दकविविरचितम्

# ॥ संक्षिप्तरामायणम् ॥

———०ః:०:ః०———

ससीतालक्ष्मणं वन्दे रामं राजीवलोचनम् ।
यन्नामकीर्तनाल्लोको मुच्यते भवबन्धनात् ॥ १ ॥

संक्षिप्ताच्च क्रमेणार्थैः संक्षिप्याद्य मया स्तुतः ।
स्वदेत रामवृत्तान्तो न किं संशृतदुग्धवत् ॥ २ ॥

अस्त्ययोध्येति विख्याता वैकर्तनमहीभुजाम् ।
राजधानी स्वया लक्ष्म्या हसन्तीवामरावतीम् ॥ ३ ॥

आसीद्दशरथो नाम तस्यां नृपतिसत्तमः ।
सर्वे च वश्या यस्यासन्बलिनो नयचक्षुषः ॥ ४ ॥

सोऽनपत्योऽपत्यकृतं पूर्णत्वं शास्त्रवित्स्मरन् ।
अदूयतापूर्णमानी शक्रतुल्यर्द्धिभागपि ॥ ५ ॥

तेनानुयुक्तः पुत्रार्थं चिरेण तपता भृशम् ।
प्रत्यग्दशां प्रवेकोऽथ ब्रह्मसूनुरभाषत ॥ ६ ॥

आहरन्नेव पुत्रीयमृश्यशृङ्गर्त्विजं मखम् ।
लप्स्यसे कामनासिद्धिं त्रिवर्गलघुपद्धतिम् ॥ ७ ॥

इत्युक्ते गुरुणा भूपेऽमात्या लालाटिकाः प्रभोः ।
जग्मुस्तमानिनीषन्तो मुनिं वैभण्डकिं क्षणात् ॥ ८ ॥

यदा विधिवदानीय शान्तेशो मुनिरर्चितः ।
तदैव शान्तवापेऽभूत्पुत्रं लब्ध्वेव भूपतिः ॥ ९ ॥

ततस्तदुपदिष्टेन विधिना स यथाविधि ।
सप्ततन्तुं करोति स्म पुत्रीयं सरयूतटे ॥ १० ॥

रावणोपप्लवक्लान्तानथ सेन्द्रान्सुपर्वणः ।
आदाय प्रययौ वेधा हरिं क्षीराब्धिशायिनम् ॥ ११ ॥

अद्राक्षुः कलशाम्भोधेरात्तवेला दिवौकसः ।
भुजङ्गराजशयनमजं गरुडवाहनम् ॥ १२ ॥

गतागतेषु संभ्रान्ताद्धर्षर्तुनवनीरदात् ।
प्रभ्रष्टमिव तच्छावं नीलाङ्गरुचिमेदुरम् ॥ १३ ॥

स्पृष्टोऽथ कमलाजानेर्विधातापाङ्गधारया ।
सहस्रकृत्वः प्राणंसीत्कार्यं चास्मै व्यजिज्ञपत् ॥ १४ ॥

निध्याय रक्षोदुर्वृत्तं निर्जराणां च दुर्दशाम् ।
स बभाषे शरच्चन्द्रचन्द्रिकासुन्दरस्मितः ॥ १५ ॥

मा भैष्ट देवाः शोकेन कृतं भीर्व्येतु रावणात् ।
तं हनिष्यामि झटिति नीहारमिव भानुमान् ॥ १६ ॥

किंतु वंशे रघोराजेः पुत्रत्वं मे गमिष्यतः ।
साहाय्यार्थं जनयत तनयान् कीशयोनिषु ॥ १७ ॥

इत्थमुक्त्वा रमानाथे व्रजत्यक्ष्णोरगोचरम् ।
करिष्यन्तस्तदादेशं देवा जग्मुर्यथागतम् ॥ १८ ॥

प्रादुर्भूतमभौमान्नं दत्त्वा स्त्रीभ्यस्ततोऽध्वरे ।
उपजग्मे पुरीं राज्ञा कृतावभृथकर्मणा ॥ १९ ॥

अथ कालेन तत्पत्न्यो गर्भेण चिरकांक्षिताम् ।
प्राप्य श्रद्धालुतां सद्यो जहुरन्यत्र तां दृढाम् ॥ २० ॥

कौसल्या सुषुवे रामं कैकेयी भरतं सुतम् ।
यमौ लक्ष्मणशत्रुघ्नौ सुमित्रापि गुणाकरौ ॥ २१ ॥

प्रसेदुरापो जज्वाल भास्वान्मन्दं ववौ मरुत् ।
तदा जगति सर्वेषां समं समभवन्महः ॥ २२ ॥

क्रमाद्दधुः कुमारास्ते निःशेषामुक्तशैशवाः ।
कङ्कपक्षादिकं बाह्वोः काकपक्षं च मूर्धनि ॥ २३ ॥

अथ जातुचिदागत्य राज्ञा विधिवदार्चितः ।
कौशिको यज्ञरक्षार्थमर्थयामास राघवम् ॥ २४ ॥

वसिष्ठवाक्यापगतराक्षसातङ्कमन्युना ।
कुमारद्वयमस्पार्शि कौशिकाय महीभुजा ॥ २५ ॥

गुरुं तमनुगच्छन्ताविन्द्रोपेन्द्राविवाध्वनि ।
काश्चिद्दिव्याः कथाश्चास्माच्छ्रुभाते रामलक्ष्मणौ ॥ २६ ॥

ततः कृशाश्वोपज्ञानि जृम्भकास्त्राणि राघवः ।
आददे ताटकामाथे पारितोषिकदान्मुनेः ॥ २७ ॥

अथारब्धमखे तस्मिन् जीवायुक्तं धनुः परम् ।
स चकाराशरान्नाजावहंपूर्विकयागतान् ॥ २८ ॥

समाप्तदीक्षः स्वस्यैव जनकस्य क्रतावपि ।
श्रियं ग्राहयितुं रामं विश्वामित्रो व्यचिन्तयत् ॥ २९ ।

अपूर्वविषयालोकसुखिभ्याममरापगा ।
सहैव रघुबालाभ्यामुत्तीर्णा गाधिसूनुना ॥ ३० ॥

मध्येवर्त्म चिराद्भ्रष्टामग्निमत्तां तु गौतमे ।
पुनः संधापयामासुरस्य मृद्धङ्घ्रिरेणवः ॥ ३१ ॥

वैदेहो मुनिमायान्तमर्हयित्वार्हतां वरम् ।
अविघ्नं तपसोऽपृच्छद्राज्यस्यानामयं स च ॥ ३२ ॥

परस्परेण स्तुवतोर्गाधिगौतमपुत्रयोः ।
राजा सानुनयं वाक्यमाह सीरध्वजोऽन्तरे ॥ ३३ ॥

जिज्ञासे काविमौ ब्रह्मन्नपि पार्थिवलक्षणौ ।
लावण्यामृतधाराभिर्ममाङ्क इव चक्षुषी ॥ ३४ ॥

अनयोर्जन्मना को वा राजन्यो धन्यतां गतः ।
इत्युक्तवन्तं राजानं प्रत्याह कुशिकात्मजः ३५ ॥

इमौ दाशरथी राजन्भ्रातरौ रामलक्ष्मणौ ।
आनीतौ मखरक्षार्थं मया दशरथान्तिकात् ॥ ३६ ॥

एष रामोऽग्रजोऽनेन यज्ञविघ्नकरा हताः ।
इतश्चायं पुण्यजनान् सर्वान् संस्थापयिष्यति ॥ ३७ ॥

एवं पलाशिनां प्राणैः समं निर्वर्तिते क्रतौ ।
प्रसङ्गादजनिष्टास्य भवत्पादाभिसेविषा ॥ ३८ ॥

आरोप्यान्यैर्दुरारोपमेष कन्यापणं धनुः ।
त्वामद्य कुर्यान्निस्तीर्णप्रतिज्ञं यदि मन्यसे ॥ ३९ ॥

तमन्वजानान्नृपतिः स्वाधीनेऽस्मिन् जनेऽन्यथवत् ।
किं विकल्पेन भगवन्यथेष्टं क्रियतामिति ॥ ४० ॥

अथ तेन कुमारेणाटन्या घटयता गुणम् ।
भज्यते स्म धनुर्दण्डो मानेन सह धन्विनाम् ॥ ४१ ॥

प्रहृष्यादिशतस्तावज्जनकस्य पुरोधसा ।
प्रेषिता कोसलेन्द्राय सीताकल्याणपत्रिका ॥ ४२ ॥

संमर्दजनिता धूलिर्नृणां दिग्भ्यः समेयुषाम् ।
साकेतमिथिलापत्योः प्रशेमे मुत्पयोझरैः ॥ ४३ ॥

लक्ष्मणायोर्मिला देयेत्याजिराशां स पूरयन् ।
कुशध्वजसुते च स्तामन्ययोरिति चाब्रवीत् ॥ ४४ ॥

परिष्कृतं कुमारास्ते स्थितमत्युपमे पदे ।
मण्डपं शोभयांचक्रुः कृतकौतुकमङ्गलाः ॥ ४५ ॥

तदा दुन्दुभिनिर्घोषी ब्रह्मघोषैर्दिवं ययौ ।
पुष्पवृष्टिस्तु देवानां पौरानन्दजलैर्भुवम् ॥ ४६ ॥

ते चत्वारश्चतमृणां जयत्पीडापहं क्रमात् ।
कुमारा राजपुत्रीणां व्यदधुः पाणिपीडनम् ॥ ४७ ॥

सीतया जनकादात्तानेकयौतकसंपदा ।
सानुगोऽथ समं रामः प्रतस्थे स्वां पुरीं प्रति ॥ ४८ ॥

रुरोध क्षत्रसंवर्तकुठारक्रूरदर्शनः ।
भार्गवो मुनिरध्वानं राघवस्य जिगीषया ॥ ४९ ॥

दृप्यता मुनिना दत्तं धनुरेव न राघवः ।
नम्रीचकार तं चायं प्राणच्युतिभयार्दितम् ॥ ५० ॥

मूर्ध्न्याशिषं भृगुसुतेन दधाद्वितीर्णा-
मंसे च तद्विजयि तस्य महाकार्मुकम् ।
साकेतमेत्य नयवित्सकलप्रजाना-
माह्लादको विधुरिवाजनि रामचन्द्रः ॥ ५१ ॥

इति श्रीमुद्गसुब्रह्मकाविविरचिते संक्षिप्तरामायणे
॥ बालकाण्डः ॥

## अयोध्याकाण्डः

गच्छ मातुलकुले स्वबान्धवान्प्रीणयन्वस चिरोत्सुकानिति ।
आज्ञया पितुरमुक्तसोदरस्तज्जगाम भरतो महामतिः ॥ १ ॥
एकदा स चकमे जरन्नृपो दुर्भरं चिरधृतं भुवो भरम् ।
आत्मजे लघयितुं दमोज्ज्वले सर्वसंवननसद्गुणाकरे ॥ २ ॥
तद्विभेदयितुकामयेरिता केकयी हितगिरेव कुब्जया ।
इत्यशिश्रवत भूभुजे वरौ देहि मे युधि पुरा प्रतिश्रुतौ ॥ ३ ॥
तत्र शास्तु भरतो वसुंधरामेक एवमपरो वरस्तु मे ।
राम आश्रितमुनिव्रतो वने संचरत्विति समाश्चतुर्दश ॥ ४ ॥
वज्रपातपरुषं निशम्य तत्सत्यवाङ्श्रवणदारणं वचः ।
कृत्तमूल इव भूरुहस्तदा राम हेति निपपात भूपतिः ॥ ५ ॥
निर्दयत्वमुपदर्श्य यावतीरुज्जगार रुशतीः स योषिति ।
सापि भूभुजि निरूप्य दुर्मतिस्तावतीरथ मृषार्थवादिताम् ॥ ६ ॥
राघवाय पितरं शुचातुरं वीक्ष्य शङ्कितधिये त्वतद्विदे ।
बद्धकौतुककराय पृच्छते तन्निदानमपभीरुवाच सा ॥ ७ ॥
त्वं तपस्य विपिने तवानुजः पालयत्ववनिमस्य शोचने ।
हेतुरेष इति मातुराददे शासनेन सह सोऽपि वल्कलम् ॥ ८ ॥
रुद्धयापि रचितानुयात्रया सीतयैव सह पौरचेतसा ।
आरुरोह स सुमन्त्रयन्त्रितं स्यन्दनं रघुपतिः सलक्ष्मणः ॥ ९ ॥
भिल्लभूभृदुपनीतनौसमुत्तीर्णनिर्जरतरङ्गिणीजलः ।
संचचार स सदारसोदरो नव्यकल्पितजटस्तपोवने ॥ १० ॥

आवहञ्शिरसि भूषणं मुनेराङ्घ्रिरेणुमनुजेन निर्मिते ।
चित्रकूटभुवि पर्णमन्दिरे सीतया सुखमुवास राघवः ॥ ११ ॥

सारथिस्तु पुनरागमे विभोराशयादिव मनोरथं रथम् ।
संनिवर्त्य सुरनिम्नगातटादार्त आर्च्छदयथापुरं पुरम् ॥ १२ ॥

रामशून्यरथदर्शनात्परं पौरमुन्न विरराम केवलम् ।
पुत्रशोकदवदग्धचेतसः प्राणवायुरखिलोऽपि भूपतेः ॥ १३ ॥

भूपविक्रमकथानुरोधनै रामसद्गुणचरित्रवर्णनैः ।
केकयाधिपसुताविगर्हणैः पूरपूर्यखिलपौररोदनैः ॥ १४ ॥

देशिकस्य भरतः सुधीस्तु संदेशतस्तदनु मातुलालयात् ।
मुक्तरश्मितुरगः सहानुजः पूर्गतं निजमनोऽन्वधावत ॥ १५ ॥

शङ्कितं पुरमवेक्ष्य पादयोरानतं भरतमम्ब मे गुरुः ।
कुत्र वेति पितृदर्शनोत्सुकं त्वप्रियं प्रियमिवाह केकयी ॥ १६ ॥

त्वत्कृते शिथिलितं नृपाद्धृतं वत्स राममकुटाभिषेचनम् ।
द्रावितश्च वनमेव राघवः सीतया विधृतवल्कलाजिनः ॥ १७ ॥

तातमात्मजवियोगशोकतः संस्कुरुष्व विधिवन्मृतं ततः ।
पौरवृद्धकृतमौलिसेचनो निःसपत्नमनुभुङ्क्ष्व चावनिम् ॥ १८ ॥

इत्युषर्बुधसखी यदा हि गीरस्य कर्णमविशत्स्वमातृतः ।
सद्य एव हृदयं तदाजहाच्चेतना परमसह्यवेदनम् ॥ १९ ॥

लब्धसंज्ञ उरु भर्त्सयन्प्रसूं धिग्धिगित्यधिकरूक्षया गिरा ।
तद्गृहात्स ससहोदरः शुचा तप्यमानहृदयो विनिर्ययौ ॥ २० ॥

संस्क्रियां तु पितुरौर्ध्वदेहिकीमाहिताग्निविधिना विधाय सः ।
प्रार्थितोऽथ मकुटाय मन्त्रिभिः प्रत्यभाषत पुरःसरः सताम् ॥ २१ ॥

धारयेय मकुटं तदा ह्ययं दण्डकासु न लभेय चेद्भयम् ।
आश्रमं तपसितुं तथा जटासंयमाय च वटस्रुतं पयः ॥ २२ ॥

इत्युदीर्य कृतिनं कृतोद्यमं दण्डकावननिषेवणाय तम् ।
आशिशुस्थविरमन्वगुर्जना राघवाख्यममृतं पिपासवः ॥ २३ ॥

धूलिभिर्निजपदोत्थिताभिरुत्पादितामरधुनीकलङ्कया ।
सेनया स चतुरङ्गयाभवन्मातृभिश्च पथिकः पुरोधसा ॥ २४ ॥

राममेति भरतोऽभिषेणकः किं द्विषन्निति वितर्कयन्गुहः ।
शुद्धमस्य विमृशंस्तदाशयं तं मुदा सुरनदीमतीतरत् ॥ २५ ॥

आतिथेयविधिसत्कृतं भरद्वाज आर्यपदसेवयोत्सुकम् ।
तन्निवासकथया व्यशिश्रमद्दीनदीनमथ तं मुनिव्रतम् ॥ २६ ॥

तं विलोक्य विजिगीषयोद्यतं लक्ष्मणं विनयति स्म राघवः ।
वत्स मैवमपदे पदं कृथा अर्हतां हि भरतोऽग्रणीरिति ॥ २७ ॥

तत्र पर्णकुटिकाग्रसीमनि स्थण्डिलेऽजिनसमावृते स्थितम् ।
चीरिणं जटिनमावृतं मृगैः सेव्यमानमनुजेन च स्त्रिया ॥ २८ ॥

वीक्ष्य राममतदर्हदुर्दशं दुर्निवारतरशोकवेगितः ।
मत्कृते व्यसनमीदृशं विभोर्मां धिगित्यनुपदं विगर्हयन् ॥ २९ ॥

प्राप्य साधुरभिशस्ततामिव स्वात्मनात्मनि विशन्निव ह्रिया ।
पादमूलमवाप्य विह्वलस्त्वार्य हेति भरतोऽपतद्भुवि ॥ ३० ॥

तं तथा पतितमाकुलं समाश्वास्य सम्यागितरांश्च पूजयन् ।
राघवः पितुरवेत्य तां गतिं तात हेति विललाप दुःखितः ॥ ३१ ॥

वृत्तवानतिवयाश्च ते पिता नैव शोच्य इति वृद्धबोधितः ।
लक्ष्मणेन सह पारलौकिकीश्चक्रिवान् रघुपतिः पितुः क्रियाः ॥ ३२ ॥

तं समाप्य विधिमागतं पुनः संप्रणम्य पदयोर्मुहुर्मुहुः ।
संप्रसादयितुकाम ऊचिवान् साञ्जलिर्भरत आर्यमार्यधीः ॥ ३३ ॥

आर्य सोन्नतिजुषां सतां गणैः संयुतापि भृशभासुरात्मनाम् ।
राजनि त्वयि वनं गते पुरी शर्वरीव न विराजतेतराम् ॥ ३४ ॥

लोकनाथ किमनाथवत्त्वया नाथवत्यपि विषीदति प्रजा ।
तावकीं वह जहीहि वा धुरं सर्वथापि खलु दुर्वहां मया ॥ ३५ ॥

इत्यकैतवमनोरमामसौ भारतीमथ निशम्य भारतीम् ।
राघवो मुदितमानसोऽप्युपच्छन्दयन्निजगिरा तमब्रवीत् ॥ ३६ ॥

वत्स किं पितृनिदेशवर्तनादन्यदस्ति करणीयमुत्तमम् ।
श्रूयते हि विनिमित्य वार्धकं योऽददात्स्वगुरवे निजं वयः ॥ ३७ ॥

तेन तातवचनं तदावयोः पाल्यमित्युपदिशन् रघूद्वहः ।
पादुके प्रतिभुवाविवात्मनो न्यासयन् स भरतं न्यवीवृतत् ॥ ३८ ॥

प्रत्यावृत्तः कथमपि ततः पादुके सोऽभिषिच्य-
न्नन्दिग्रामे दिवसगणनातत्परो भ्रातुरास्त ।
रामस्त्वद्रिं जनपरिचयात्तापसानां च भावा-
न्मुञ्चन्नत्रेरपि बहुमतः प्राविशद्दण्डकायाम् ॥ ३९ ॥

इति श्रीमुद्दुसुब्बकविविरचिते संक्षिप्तरामायणे

अयोध्याकाण्डः

## अरण्यकाण्डः

प्रविश्य रामो विपिनं सलक्ष्मणः प्रतप्तजाम्बूनदवर्णया स्त्रिया ।
चचार धन्वी गगने मरुत्सखः सहेन्द्रचापस्तडितेव तोयदः ॥ १ ॥

विराधनामाथ निशाचरस्तयोर्निरुध्य मार्गं वरदानदर्पितः ।
स्त्रियं प्रसह्यापहरन् रघूद्वहप्रतापवह्नौ शलभत्वमीयिवान् ॥ २ ॥

उपस्थितं शक्रमपि प्रयापयन् प्रियातिथिं राघवमर्चयन्मुनिः ।
समक्षमस्यैव तनुं त्यजन्दिवं सुरार्चितोऽगाच्छरभङ्ग आत्मवान् ॥ ३ ॥

ततः सुतीक्ष्णाश्रममेत्य तत्र ते सुसत्कृतास्तेन फलादिभिस्त्रयः ।
सुखेन तां न्युष्य निशां परेद्यवि प्रणम्य तेनानुमताः प्रतस्थिरे ॥ ४ ॥

समुद्रविन्ध्यावगते गभीरिमोन्नती विरुद्धे अपि यत्र सुस्थिते ।
तमाश्रमस्थं मुनिमेत्य भक्तितो ननाम रामो निजनाम कीर्तयन् ॥ ५ ॥

विलोक्य देवायतनानि विस्मितं हुताग्निरेनं विधिवत्समर्चयन् ।
ददावगस्त्योऽमितदीप्ति वैष्णवं धनुः स तस्मै सनिषङ्गसायकम् ॥ ६ ॥

तदाश्रमात्पञ्चवटीं द्वियोजनां तदाज्ञया दाशरथिर्व्रजन्पथि ।
समेत्य गृध्राधिपतिं जटायुषं पितुः सखायं पितृवन्ममान सः ॥ ७ ॥

सहैव तेनैत्य विवक्षितं स्थलं समे प्रदेशे सहजेन निर्मिताम् ।
स पर्णशालां सुखमावसत्समं विदेहपुत्र्या त्रिदिवं यथामरः ॥ ८ ॥

शरत्सु बह्वीषु गतासु हैमने वगाहनायापररात्र उत्थितः ।
गोदावरीं स प्रियया सह व्रजन्नूचेऽनुजेनानुगतेन राघवः ॥ ९ ॥

हिमागमेऽस्मिन् जडवातदुःसहे दुःस्पर्शतोये भरतो भवानिव ।
सर्वात्मनानुव्रत आर्यमार्यधीर्ध्रुवं जलं सारवमद्य गाहते ॥ १० ॥

किं त्वस्य माता दयिता पितुश्च नः कथं न्वनार्यैवमभूदितीरिते ।
न मातरं गर्हय तं तु तोष्टुहि त्वामित्यशात्तं प्रियबान्धवोऽनुजम् ११

अथाश्रमे राममुपस्थिताशरी सुदुर्भगा वै सुभगेव कामुकी ।
जिहीर्षुरार्यां वितथे मनोरथे निराकृता विप्रयतानुजन्मना ॥ १२ ॥

नराभकात्तत्स्वसृवैकृतं विदन् रुषा जनस्थानचरो निशाचरः ।
बलं समस्तं तरसाभिसारयन् खरो रणायाभिससार राघवम् ॥ १३ ॥

ध्वनिं ध्वजिन्या रजनीचरेशितुर्द्रवन्तमाशाध्वनि साध्वसाद्रिपुम् ।
तदानुमायेव हठादवप्लुतो रुरोध तं रामशरासनध्वनिः ॥ १४ ॥

घ्नतोऽपि रक्षांस्यनयो न हि प्रभोर्यद्रक्तरूपा विविधास्तदुत्थिताः ।
युताः सुरीभिश्च पयोधिभिः प्रियाः सर्वं हितायैव महत्समीहितम् १५

बलं निरीक्ष्य स्वभुजावशेषितं खरस्तदा रोषकषायितेक्षणः ।
शरैरभाङ्क्षीद्रघुनाथकार्मुकं पुनस्तथान्यैश्च तनुत्रमच्छिदत् ॥ १६ ॥

रामो गृहीत्वा कवची शरासनं स वैष्णवं ज्यामधिरोपयन् क्षणात् ।
उद्घोषयन्कुण्डलयांबभूव तत्तदा खरस्याप्यभितो लिपिं विधिः ॥ १७

दृष्ट्वा जनस्थानमकण्टकीकृतं रक्षोघ्नमन्त्रं युधि वीरराघवम् ।
अतीव हृष्टा ववृषुस्तथा सुरा यथावचीयेत सुमं सुरद्रुमे ॥ १८ ॥

निशम्य वृत्तं निखिलं स्वसुर्मुखान्निशाचराणामधिपोऽथ रावणः ।
निजघ्नुषः स्वान्सुहृदः प्रतिक्रियां तदीयभार्याहरणं स्म मन्यते १९

मारीचमासाद्य तदर्थमेककस्तपस्यता तेन यथार्हमर्हितः ।
निवेदिताभ्यागमहेतुना भृशं तस्तेन पथ्यार्थमबोधि रावणः ॥ २० ॥

जिजीविषा चेज्जननीव जानकी संमाननीया दयिता खरद्विषः ।
तथानुभूतं हि मयैव तद्बलं बिभेमि रेफादिपदश्रुतेर्यथा ॥ २१ ॥

तन्मा कृथा दुर्मतिमन्यथा पुनर्न त्वं न चाहं न च रक्षसां कुलम् ।
इत्यादिकं बीजमिवोप्तमूषरे व्यर्थं विदन्हेममृगो बभूव सः ॥ २२ ॥

अवेत्य तस्मिन्हरिणे हिरण्मये प्रियाभिलाषं रघुनायको यदा ।
तमन्वधावीदिषुचापभृत्तदा स्वयं च लब्धावसरः परेतराट् ॥ २३ ॥

रामास्ततः पुण्यजनो भवन्नयं त्वाक्रन्द्य हा जानकि लक्ष्मणेति च ।
कुरङ्गमो विष्णुपदं गतोऽपि सन्नहो जगत्यां पतितस्तदाभवत् २४
तदार्तशब्दाकुलयार्ययेरिते गते सुमित्राभुवि राघवान्तिकम् ।
जहार सीतां विजने स रावणो हठाज्जिगीषोरसुभिर्जटायुषः ॥ २५
अथान्यमाक्रन्दमविन्दतीं भिया चोक्रुश्यमानां पतिमात्मदैवतम् ।
अतार्किते शोकमहोदधौ प्लुतामशोकमेनामनयोऽनयत्स्वयम् ॥२६
सलक्ष्मणस्त्वाश्रममेत्य राघवो विलोक्य शून्यं दयितां ततस्ततः ।
विचित्य विक्रुश्य विलप्य चासकृन्मुमोह कुत्राप्यनवाप्य तद्गतिम् २७
स लब्धसंज्ञः सहलक्ष्मणो वने चरन् जटायोर्दशया व्रणे हतः ।
तमुत्तमां संस्क्रियया गतिं नयन् कृतानुकारी तदृणादमुच्यत २८
विदेहपुत्र्या विचिचीषया पुनः प्रतस्थुषोः दक्षिणकाननं तयोः ।
निरुध्य मार्गं निशिचर्ययोमुखी विरूपणाच्छूर्पणखासखीकृता २९
भुजौ कबन्धस्य निकृत्य हिंसकौ तदीयदेहं प्रदरे दहन्विभुः ।
विधूय शापं दिवमारुरुक्षता तेनोपदिष्टां पदवीमशिश्रियत् ॥ ३०

सपर्यां स्वीकुर्वन्नथ पथि शबर्या विरचितां
ससोदर्यो भार्याविरहभृशपर्याकुलमतिः ।
अतीव स्वच्छाम्भः सुरभिवनवातं पिकरवैः
सरः पम्पाभिख्यं विरहिजनकम्पावहमगात् ॥ ३१ ॥

इतिश्रीमुद्दसुब्बकविविरचिते संक्षिप्तरामायणे

॥ आरण्यकाण्डः ॥

## किष्किन्धाकाण्डः

स तां मनोज्ञां सरसीं विलोक्य वसन्तलक्ष्म्या च विशेषरम्याम् ।
प्रियावियोगार्तिमतिप्रवृद्धां सोढुं नशक्तः करुणं व्यलापीद् ॥ १ ॥

प्रियाणि मे यानि पुरा तयासंस्तान्येव जातान्यधुनाप्रियाणि ।
इदं सरोरत्नमिमे वनान्ता अयं च कालः क्व गतासि सीते ॥ २ ॥

निर्विष्टवाँल्लक्ष्मण माधवोऽयं ध्रुवं कणेहत्य वनालिकान्ताम् ।
कुतोऽन्यथास्या नखरक्षतानि ममापि तत्स्याद्यदि सा प्रिया स्यात्

न तापयेदन्यमिति श्रुतं ते नास्तीति मन्ये कलहंस यत्त्वम् ।
प्रियां तवालिङ्ग्य ममाग्रतो मां तद्दुःखदीनं कलुषीकरोषि ॥ ४ ॥

नाहं विषीदामि तथा हृतां त्वामयं तु बाले मम शोकहेतुः ।
विचिन्त्य नित्यं वयसोऽध्रुवत्वं कालं च भोगेन विनैव यान्तम् ॥ ५

विनष्टबन्धुं विलयोन्मुखं मां वामः प्रहृत्यापि न हन्ति कामः ।
मुह्यन्मुहुर्जानकि जानकीति शश्वत्समाश्वास्यत लक्ष्मणेन ॥ ६ ॥

तौ वीक्ष्य वालिप्रहिताविमावित्यातङ्किना सूर्यभुवा निसृष्टः ।
कपिर्हनूमानिति बुद्धिवित्तः पुरस्तयोराह वहन्वटुत्वम् ॥ ७ ॥

नर्षी पुराणौ सशरौ न चेन्द्रोपेन्द्रौ च भूस्पर्शिपदौ युवां स्थः ।
तपस्ययौत्पत्तिकसंपदोर्वां चित्रीयते साध्यविमर्शि चेतः ॥ ८ ॥

शोकं महान्तं हृदि लक्षये वां नाल्पेन तप्येत हि रूपमीदृक् ।
सुग्रीव आकाङ्क्षति वानरेन्द्रः सख्यं भवद्भ्यां यदि रोचते वाम् ॥

इत्थं यथावत्स्वकथां निवेद्य तद्वाक्प्रतिप्रत्ययितो हनूमान् ।
सौमित्रिणाख्याततदीयवृत्तः प्लवङ्गराजा समदीपयत्तौ ॥ १० ॥

उभौ च तुल्यव्यसनाभिभूतौ तावृश्यमूके नरवानरेन्द्रौ ।
वह्निं पुरोधाय मिथो व्यधत्तां मैत्रीं प्रतीकारकृते कृतान्ताम् ॥ ११

देव्यापविद्धान्यपहारकाले सुग्रीवलब्धान्यधुनार्पितानि ।
दृष्ट्वानुभूताभरणानि रामं सौमित्रिराश्वासयदार्तरूपम् ॥ १२ ॥

वृत्रारिसूनोरथ दुर्जयत्वं मित्रस्य सूनौ कथयत्यशेषात् ।
सप्तैकबाणेन तरून्विभिद्य प्रत्याययामास रघूद्वहस्तम् ॥ १३ ॥

ततः प्रतीतस्तपनस्य पुत्रः सहैव ताभ्यां स्वपरीमुपेत्य ।
आह्वास्त स भ्रातरमाहवाय जम्भारिसूनुं जगदेकवीरम् ॥ १४ ॥

प्रधर्षणां वास्यपि तामपूर्वामसृष्यमाणस्तरसाभिपत्य ।
उत्सैकभाजा युयुधेऽनुजेन गन्धद्विपेनेव गजेन्द्रशत्रुः ॥ १५ ॥

आकारचेष्टादिभिरेकरूप्यात्तौ युध्यमानाववििवच्य रामे ।
निरुद्यमेऽद्रुद्रवदद्रिमार्कि‌र्बलीयसा द्रागरिणाभिपन्नः ॥ १६ ॥

रामस्त्वपथ्यातविधा विहस्तं तूष्णीकमासीनमधोमुखं तम् ।
विश्वास्य तत्त्वोक्तिभिरङ्कयित्वा वल्या नियोक्तुं प्रजिघाय भूयः १७

तस्याभियोगात्पुनराहतः संस्तेजोऽपहारादिव हेममाली ।
निवर्त्य तारामपि सान्त्वयन्तीमयुद्ध दिष्टस्य बलेन कृष्टः ॥ १८ ॥

वक्षस्यकस्मात्कुशिता शरेण पतन्पृथिव्यां रुधिराक्तगात्रः ।
प्रशान्ततेजाः प्लवगेश्वरोऽभावस्तोन्मुखो भानुरिवोपरक्तः ॥ १९ ॥

क्षणात्स दृष्ट्वा करुणं सवाक्यं महानुभावं सूर्यसुतानुभावम् ।
अयं प्रहर्तेत्यवधार्य रामं ऋजाधिचिक्षेप कृतान्तदास्यः ॥ २० ॥

न नाम ते राम यशः महीशां मान्यं सुधर्मेण मनन्तरं च ।
सार्द्धं व्यजेष्ठाः स्वयमप्यमित्रो पाल्येषु पैकं मृगयारसज्ञः ॥ २१ ॥

उक्ताऽथ रामेण मयाद्य दण्डो भ्रातृद्रुहस्ते विहितो हिताय ।
स्वयाह्यपापस्त्वमिति व्यरंसीत्पारुष्यवादादिव जीविताच्च ॥ २२

आश्वास्य तारामथ वीरपत्नीं संस्कार्य तं तज्जनुषाङ्गदेन ।
तं यौवराज्ये न्यदधात्कपीनां राज्ये च सुग्रीवममोघसंवित् ॥ २३

लब्धास्पदे प्रत्युपकारकालं वर्षान्तमाश्रित्य गते वयस्ये ।
रामो गिरौ प्रस्रवणे न्यवात्सीत्सहानुजस्तत्समयप्रतीक्षः ॥ २४ ॥

सविद्युतो व्योमनि वारिवाहान्दृष्ट्वा भृशोद्दीपितकामवह्निः ।
चचाल धीरोऽप्यचलास्थितोऽपि विमुक्तकण्ठोऽथ स रोदिति स्म २५

पर्जन्यघोषेण तु यत्र भीरुर्मुहुर्मुहुर्मां परिषस्वजे सा ।
स एव कालो मम वल्लभोऽपि नष्टप्रियस्याक्षिगतोऽद्य जातः ॥ २६

चन्द्रानने हंसगतेऽम्बुजाक्षि तोयोत्थितोद्भासिनितम्बबिम्बे ।
हा हा जडात्मा समयो मयीत्थं विनोदमात्रेऽपि तवात्यमर्षी ॥ २७

एवं विलापैरपवाह्य वर्षाः काले व्यतीते बहुशो निराशः ।
स लक्ष्मणं प्रेषयति स्म वत्स कपिं कृतघ्नं द्रुतमाहरेति ॥ २८ ॥

तस्मिन्नसह्यप्रतिघे तथेत्य पुरान्तिकं किंचिदुदञ्चितज्ये ।
क्षुभ्यत्कपीन्द्रप्रहिताथ तारा सौमित्रिमूचे मदलोलतारा ॥ २९ ॥

त्वमेव कामव्यसनानि वेत्सि चत्वारि वा कष्टतमानि तेषु ।
चिरात्तदासाद्य तव प्रसादात्तत्र प्रसक्तो न पुनः प्रमत्तः ॥ ३० ॥

स चाद्य सर्वैः सह यूथनाथैः प्रतीक्षते त्वामिति सान्त्वितेन ।
सौमित्रिणा प्राप्य विभुं कपीन्द्रः सर्वौघमस्मै स्वबलस्य चख्यौ ।
तस्यानुमत्या प्लवगास्तदुग्रं सुग्रीवसंदेशमथावहन्तः ।
आशान्तमेत्याप्यनवाप्य सीतामायान्नवाचीगतसैन्यवर्जम् ॥ ३२ ॥

तां दक्षिणस्यां दिशि तत्र तत्र विचित्य दैवान्निबिडान्धकारे ।
बिले पतित्वा भ्रमतः कपीन्द्रान्स्वयंप्रभाश्वास्य निनाय वर्त्म ॥ ३३

तान्मर्तुकामान्समयातिपातात्प्रसङ्गविज्ञातजटायुवृत्तः ।
निर्दिश्य पारेऽब्ध्यतिदूरहक्तां संपातिरुज्जीवयति स्म गृध्रः ॥ ३४ ॥

दुष्पारपारं तरितुं गभीरं भग्नोद्यमेष्वम्बुनिधिं बलेषु ।
ऋक्षाधिपो धीसचिवश्चिरायुरेकान्तसंस्थं हनुमन्तमूचे ॥ ३५ ॥

कस्मादिमामात्ययिकीं दशां नः पश्यन्नुदास्से जगदेकमल्ल ।
त्वं सूर्यबिम्बं फलधीर्जिघृक्षुर्वज्राहतोऽद्रौ निपतन्हनूमान् ॥ ३६ ॥

त्वं वायुभूस्तत्सदृशश्च कस्मान्न बुध्यसे कुम्भजपीतशेषम् ।
तत्सागरं गोष्पदवत्प्लवङ्ग प्रवांश्च नः पाहि यशो भ्रमस्व ॥ ३७ ॥

स्तुत्यैवं वर्धमानस्वतनुरथ बलिध्वंसिरूपानुकारी
कुर्वन्भीमाट्टहासं कुपितनरहरिध्वानवत्तारतारम् ।
वाराहं स्पर्धमानो वपुरिव मुहुरुत्पुच्छ्य धीमान्हनूमान्
पारावारं स रेजे प्रलयचरमहामत्स्यवत्पारयिष्यन् ३८

इति श्रीमुद्गलभट्टकविविरचिते संक्षिप्तरामायणे
॥ किष्किन्धाकाण्डः समाप्तः ॥

## सुन्दरकाण्डः

ततो महेन्द्राच्छलधिं तितीर्षुः संस्तभ्य बाहू चरणौ निपीड्य ।
उदग्रकण्ठो हृदि रुद्धवायुः स उत्पपातोर्ध्वमुदीक्षमाणः ॥

प्रचण्डवेगाहतवृक्षषण्डः प्रसारितोच्चण्डभुजाग्रकाण्डः ।
अव्याहतस्वैरगतिर्जगाम धनुश्च्युतो रामशरो यथाजौ ॥ २ ॥

आपृच्छ्य सान्त्वेन हिरण्यनाभं दृष्टोऽतिवृद्धां सुरसामतीत्य ।
छायाकृषं रात्रिचरीं प्रमथ्य सुखं ययौ दक्षिणसिन्धुतीरम् ॥ ३ ॥

विशन्निशादौ पुरदेवतां स विधाय मृत्योः प्रथमोपहारम् ।
चन्द्रोज्ज्वलायां निशि तत्र तत्र भूत्वाल्पकायो विचिकाय सीताम् ४

शुद्धान्तगा राक्षसराजकान्ता दृष्ट्वापि निद्राविवशा निशीथे ।
न वैकृतं किंचिदवाप देव्या अदर्शनात्तु व्यथितो महत्सः ॥ ५ ॥

यदृच्छयाशोकवनीं प्रविश्य प्रसार्य सर्वत्र दृशं तरुस्थः ।
ददर्श सीतां मलिनैकवस्त्रां तपस्विनीं पङ्कविदिग्धगात्राम् ॥ ६ ॥

ऊष्मायमाणश्वसितोपरक्तां बाष्पायमाणाविलविह्वलाक्षीम् ।
महोपवासव्रतकर्शितासुं रामास्थया केवलमप्रणष्टाम् ॥ ७ ॥

तामेकपत्नीं जनकात्मजेति प्रसन्नधीर्हेतुभिरूहमानः ।
रामो वियोगामपि जीवतीति सुदुष्करं वा इदमित्यमंस्त ॥ ८ ॥

अत्रान्तरे रावणमापतन्तं स्मरातुरं संवृतमङ्गनाभिः ।
विलोक्य भीता कदलीव वाते दुःखासिकामास विदेहपुत्री ॥ ९ ॥

तस्याः समक्षं पतिदेवतायाः स क्षुद्रबुद्धिः प्रललाप पापः ।
दृष्ट्वैव किं मां त्वयि सानुरागं बिभेषि जिह्रेषि विलीयसेऽङ्ग ॥ १० ॥

न तेऽस्ति शोकावसरोऽद्य भीरु सर्वेश्वरे मय्यपि दासभूते ।
यातं न चायास्यति यौवनं ते स्नेहानुवृत्तिर्विहिता न पत्यौ ॥

स तापसस्त्वद्विरहाद्वनान्ते मृतो हतो वा युधि यातुधानैः ।
समुद्रमासाद्य च किं करोतु प्रसीद शुष्काद्विरमाभिलाषात् ॥ १२ ॥

प्रिये त्यजेयं मम जीवितान्तं सर्वं त्वदर्थं यदि मन्यसे त्वम् ।
इत्याद्यनार्यं प्रलपन्तमग्रे तृणं विनिक्षिप्य जगाद साध्वी ॥ १३ ॥

कुलं च शीलं च बलं कुमारस्य न कत्थसे त्वं परदारचोर ।
स्मृत्वा जनस्थानगतान्स्वबन्धूनद्यैव मामर्षय लोकनाथे ॥ १४ ॥

स हि प्रपन्नं शरणं शरण्यः प्रसत्स्यति त्वय्यपि दीनबन्धुः ।
त्वरस्व भवत्कुलनाथदाराः कुले कुले ते न चरन्ति यावत् ॥ १५ ॥

पथ्यामतत्कृत्य तदुक्तिमेनां वश्यां कुरुध्वं सकलैरुपायैः ।
इति क्रुधादिश्य निशाचरीः स ययावनर्थेऽर्थमतिर्निशान्ते ॥ १६

ततो भृशं तर्जनभर्त्सनाद्यैस्तां क्लेशयन्तीं रजनीचरीस्ताः ।
रक्षःकुलानर्थसमाप्तदृष्टं दुःस्वप्नमुक्त्वा त्रिजटा रुरोध ॥ १७ ॥

सा सान्त्विताप्युत्कटमन्युरात्मत्यागाय बाला कृतनिश्चयाथ ।
दृष्ट्वा निमित्तानि शुभानि पूर्वं सिद्धानि किंचिद्धृषितावतस्थे ॥ १८ ॥

तस्मिन्क्षणे कीर्तितसूर्यवंशः शनैः शनैः प्रत्ययितां स देवीं ।
प्रणम्य वृत्तं निखिलं निवेद्य समर्पयामास च राममुद्राम् ॥ १९ ॥

तां हृष्टरूपां कपिरानयामि रामान्तिकं त्वामिति वर्णयित्वा ।
वाचं शरीरं च तदावशो द्वयं च संकोच्य पुनर्बभाषे ॥ २० ॥

स्थाने तवेदं रघुवीरपत्नि कर्ता प्रियं ते प्रभुरेव सैन्यैः ।
त्वद्दृश्यभिज्ञानमवाप्य किंचिद्रामान्तिकाय त्वरते मनो मे ॥ २१ ॥

चूडामणिं प्राप्य ततो हनूमान्धाराधरानुग्रहणाधिकं च ।
देवीमनुज्ञाप्य विविक्तसेवी व्यचिन्तयत्संस्कृतधीः कृतार्थः ॥ २२ ॥

दृष्टाद्य देवी न पुना रिपोस्तद्बलाद्यवश्यं विजिगीषुवेद्यम् ।
तत्साधनं तुर्यमुपायमत्र मन्ये प्रमथ्नामि वनं तदेतत् ॥ २३ ॥

एवं विनिश्चित्य वनं प्रभञ्जन्प्राभञ्जनी राक्षसराजगुप्तान् ।
निजघ्निवान् किंकरजम्बुमालिसेनाधिपांस्तत्तनयं च सोऽक्षम् २४ ॥

अन्तर्हिते शक्रजिता प्रयुक्ते तेन महास्त्रे शणसूत्रकल्पैः ।
रक्षोभिराकृष्य स नीयमानो ददर्श तं राक्षससार्वभौमम् ॥ २५ ॥

दशाननं विंशतिबाहुभीमं चतुष्पदं माषचयातिनीलम् ।
सुराङ्गनाचामरवीज्यमानं महासनस्थं सुरलोकशत्रुम् ॥ २६ ॥

तं तेजसा दीप्तमवेक्ष्य मेने न चेत्कृतोदग्र महानधर्मः ।
अयं स ईष्टे ससुरासुरस्य सचराचरस्य जगतोऽपि चेति ॥ २७ ॥

सोऽपि प्लवङ्गं द्रुतहेमवर्णं पिङ्गेक्षणं विद्रुमपाटलास्यम् ।
महाहनुं वज्रतनुं प्रगल्भं दृष्ट्वाशशङ्के न विसिष्मिये च ॥ २८ ॥

पृष्टः प्रहस्तेन ततो हनूमानकातरं प्राह वचो हितं च ।
मां विद्धि दूतं रघुनायकस्य वालिद्विषो हैहयशत्रुजेतुः ॥ २९ ॥

रामस्य मित्रं कपिचक्रवर्ती त्वां शास्ति रक्षोऽधिप मन्मुखेन ।
स्त्रीचोर लोप्त्रं स्वमयातयित्वा स्थितिर्जगत्यां तव दुर्लभेति ॥३०॥

क्रुधा वधायाप्रियवादिनोऽस्य समुद्यतं रावणमग्रजातम् ।
न क्वापि दूतो वधमर्हतीति विभीषणो धर्म्यमतिर्न्यषेधीत् ॥ ३१ ॥

ततो निवृत्तः सच वानराणां प्रियं हि पुच्छं तदयं दुरात्मा ।
कृशानुना तत्र विरूप्यतामित्यभिधाय रक्षांसि तथा चकार ॥ ३२ ॥

मित्रस्य पुत्रं दहनोऽपि बाले रक्षासमानः सुतवत्पुपोष ।
पितुः सखायं पितृवद्रिपूणां सोऽपि प्रवीरः सदनैरतार्पीत् ॥ ३३ ॥

तदग्निसात्कृत्य पुरं समस्तं बलैकदेशं च रिपोः प्रमथ्य ।
देवीमनुज्ञाप्य पुनश्च वीरः प्रतिप्रतिष्ठासुरभूत्कृतार्थः ॥ ३४ ॥

आयान्तमाक्रम्य दिवं च सिन्धुं महौजसं सेनानिरस्तमेवम् ।
तं रत्नसानुप्रतिमं निरीक्ष्य प्रजा इवार्कं कपयोऽभ्यनन्दन् ॥ ३५

कुलं च शीलं च कलङ्कयन्स्वं न लज्जसे त्वं परदारचोर ।
स्पृष्ट्वा जगत्संगतगात्रमङ्कमूनयैव मामर्षय लोकनाथे ॥ १४ ॥

स हि प्रपन्ने शरणं शरण्यः प्रसत्स्यति त्वय्यपि दीनबन्धुः ।
त्वरस्व तावद्रघुनाथबाणाः कुले कुले ते न चरन्ति यावत् ॥ १५ ॥

पथ्यामतस्तत्कथयन्त्वमुक्तिमेनां वश्यां कुरुध्वं सकलैरुपायैः ।
इति क्रुधादिश्य निशाचरीः स ययावनर्थेऽर्थपतिर्निशान्ते ॥ १६

ततो भृशं तर्जनभर्त्सनाद्यैस्तां क्लेशयन्ती रजनीचरीस्ताः ।
रक्षःकुलानर्थसमागमाढ्यं दुःस्वप्नमुक्त्वा त्रिजटा रुरोध ॥ १७ ॥

सा सान्त्विताप्युत्कटमन्युरात्मत्यागाय बाला कृतनिश्चयाथ ।
दृष्ट्वा निमित्तानि शुभानि पूर्वं सिद्धानि किंचिद्धृषितावतस्थे ॥ १८ ॥

तस्मिन्क्षणे कीर्तितसूर्यवंशः शनैः शनैः प्रत्ययितां स देवीं ।
प्रणम्य वृत्तं निखिलं निवेद्य समर्पयामास च राममुद्राम् ॥ १९ ॥

तां हृष्टरूपां कपिराड्नयामि रामान्तिकं त्वामिति वर्णयित्वा ।
वाचं शरीरं च तदात्मवशो द्वयं च संकोच्य पुनर्बभाषे ॥ २० ॥

स्थाने तवेदं रघुवीरपत्नि कर्ता प्रियं ते प्रभुरेव सैन्यैः ।
त्वद्दैन्यविज्ञानमवाप्य किंचिद्रामान्तिकाय त्वरते मनो मे ॥ २१ ॥

चूडामणिं प्राप्य ततो हनूमान्वाराधरानुग्रहशाब्दिकं च ।
देवीमनुज्ञाप्य निविक्तसेवी त्वथाचिन्तयत्संस्कृतधीः कृतार्थः ॥ २२ ॥

दृष्टाद्य देवी न पुना रिपोस्तद्बलाद्यवस्थं विजिगीषुवेद्यम् ।
तत्साधनं तुर्यमुपायमत्र मन्ये प्रमथ्नामि वनं तदेतत् ॥ २३ ॥

एवं विनिश्चित्य वनं प्रभञ्जन्प्रभञ्जनी राक्षसराजमुक्तान् ।
निजघ्निवान् किंकरजम्बुमालिसेनाधिपांस्तत्तनयं च सोऽक्षम् २४ ॥

अन्तर्हिते शक्रजिता प्रयुक्ते [illegible]महास्त्रे [illegible]कपेः ।
रक्षोभिराकृष्य स नीयमानो ददर्श तं राक्षससार्वभौमम् ॥ २५ ॥

दशाननं विंशतिबाहुभीमं [illegible] ।
सुराङ्गनाचामरवीज्यमानं महासनस्थं सुरलोकशत्रुम् ॥ २६ ॥

तं तेजसा दीप्तमवेक्ष्य मेने न [illegible] महानधर्मः ।
अयं स ईष्टे ससुरासुरस्य सचक्रपाणेर्जगतोऽपि चेति ॥ २७ ॥

सोऽपि प्लवङ्गं द्रुतहेमवर्णं पिङ्गेक्षणं विद्रुमपाटलास्यम् ।
महाहनुं वज्रतनुं प्रगल्भं दृष्ट्वाशशङ्के न विसिष्मिये च ॥ २८ ॥

पृष्टः प्रहस्तेन ततो हनूमानकातरं प्राह वचो हितं च ।
मां विद्धि दूतं रघुनायकस्य वालिद्विषो हैहयशत्रुजेतुः ॥ २९ ॥

रामस्य मित्रं कपिचक्रवर्ती त्वां शास्ति रक्षोऽधिप मन्मुखेन ।
स्त्रीचोर सोऽप्यस्त्रमपातयित्वा स्थितिर्जगत्यां तव दुर्लभेति ॥३०॥

क्रुधा वधायाप्रियवादिनोऽस्य समुद्यतं रावणमग्रजातम् ।
न क्वापि दूतो वधमर्हतीति विभीषणो धर्म्यमतिर्न्यषेधीत् ॥ ३१ ॥

ततो निवृत्तः सच वानराणां प्रियं हि पुच्छं तदयं दुरात्मा ।
कृशानुना तत्र विरूप्यतामित्य[illegible]रक्षांसि तथा चकार ॥ ३२ ॥

मित्रस्य पुत्रं दहनोऽपि बाले रक्षन्यथा सुतवत्पुपोष ।
पितुः सखायं पितृवद्रिपूणां सोऽपि प्रवीरः सदनैस्तार्पीत् ॥ ३३ ॥

तदग्निसात्कृत्य पुरं समस्तं [illegible] स रिपोः प्रमथ्य ।
देवीमनुज्ञाप्य पुनश्च वीरः प्रतिप्रतिष्ठासुरभूत्कृतार्थः ॥ ३४ ॥

आयान्तमाक्रम्य दिवं च सिन्धुं महौजसं [illegible]निरस्तमेघम् ।
तं रत्नसानुप्रतिमं निरीक्ष्य प्रजा इवार्कं कपयोऽप्यनन्दन् ॥ ३५

दृष्टा मया राघवधर्मपत्नीत्युक्त्वा मन्दं हनुमत्युपोढे ।
उत्प्लुत्य चोत्प्लुत्य मुदा कपीन्द्रा आस्फोट्य पुच्छं च मुहुश्चुचुम्बुः
संप्रस्थिता वर्त्मनि राजकीयं वनं हनूमद्वचनात्प्रधर्ष्य ।
स्वैरं पिबन्तो मधु ते प्रसह्य तद्रक्षकान्विप्रकृतो निजघ्नुः ॥ ३७ ॥
अतिक्रमे तैः कथितेऽथ तेषां सिद्धार्थतां सोऽप्यनुमाय धीमान् ।
तैरेव सर्वानपि वानरेन्द्र आनाययामास कपीन्दिदृक्षुः ॥ ३८ ॥
सर्वैर्हनूमान् कपियूथनाथैरनुद्रुतोऽभ्येत्य विभुं प्रणम्य ।
दृष्टा मया सेति निवेद्य चूडामणिं च दत्त्वा पुनराबभाषे ॥ ३९ ॥

त्वत्प्राणां त्वन्मनस्कां तव हि भुजबलप्रत्ययादप्रणष्टां
क्षामक्षामाङ्गयष्टिं निशिचरपतिना क्लिश्यमानां दुरुक्तैः ।
रक्षःस्त्रीबाध्यमानां तनुपरिहरणेऽप्युद्यतां मुद्रया ते
प्रत्याश्वस्तां कथंचिद्रघुवर दयितामीप्स मा स्म त्याक्षीस्ताम् ४०

इति श्रीमुद्गसुब्बकविविरचिते संक्षिप्तरामायणे

॥ सुन्दरकाण्डः ॥

## युद्धकाण्डः

श्रुत्वा प्रियाप्रियतरं चरितं प्रियाया
दण्डैकसाध्यमवगत्य रिपुं च रुष्टः ।
षाड्गुण्यविद्रघुपतिर्विजिगीषमाणः
संपूर्णशाक्तिरभिषेणयितुं प्रतस्थे ॥ १ ॥
आरुह्य वायुसुतमङ्गदमप्यवाच्यां
बह्वीः ककुत्स्थतनयावटवीरतीत्य ।

आसाद्य सिन्धुमुपशान्तजवां निवेश्य
सेनां च तत्र वसतः स्म कपीश्वरेण ॥ २ ॥

ज्ञात्वा द्वितीयमिव सागरमम्बुराशेः
पारे प्लवङ्गमबलं कृतसंनिवेशम् ।
दिक्पालदर्पनिकषायितविक्रमोऽपि
रक्षःपतिर्भयदवेन भृशं दिदीपे ॥ ३ ॥

आमन्त्र्य सोऽथ सचिवांश्चकितः प्रहस्त-
मुख्यान्मिथः सबहुमानमिदं बभाषे ।
राजावरोप्य सचिवे स्वधुरामुदास्ते
व्यायामवत्सु धुरिणोऽस्य हि राज्यखेदः ॥ ४ ॥

तस्मान्न मेऽर्पितभरस्य भवत्सु चिन्ता
मन्त्रं तथापि समये कुरुतात्मनीनम् ।
न स्याद्यथा परिभवो वनवानरेभ्यः
क्षुद्रोऽपि शत्रु[illegible]नुपेक्षणीयः ॥ ५ ॥

प्रत्यब्रुवंस्तमपि ते यदि भीस्तवापि
कैलासमुद्धृतवतो जगतां विजेतुः ।
को वाभयोऽस्त्वपि न तत्र मनुष्यकीटा-
द्रक्ष्यादपूर्वदशया तव विस्मयो नः ॥ ६ ॥

यच्चापि मर्कटविचेष्टितमत्र तत्तु
नोत्प्रेक्ष्यमस्मदवहेलनमूलकत्वात् ।
तस्मान्नियुज्य तव शत्रुनिबर्हणेऽस्मान्
स्वैरं रमस्व रमणीभगिना तथेति ॥ ७ ॥

दुर्मन्त्रितं तदहितं हितवास्त्वबुद्धि-
संपादि राक्षसपतावनुमोदमाने ।
आन्वीक्षकीकृतमतिर्नयविद्धितैषी
भ्राता विभीषण इदं समुदाजहार ॥ ८ ॥

नार्हन्त्यमी अकुशलास्तव मन्त्रगोष्ठीं
कुर्यान्न वापि मतिमान्गुरुलाघवज्ञः ।
किं वा भवेल्लघुतरं परदारचौर्या-
त्किं वा स्वदारपरिरक्षणतो गरीयः ॥ ९ ॥

शूरः स्वयं नृपसुतः [illegible]
सानुज[illegible]
स्थातुं त्वया [illegible] न [illegible]
प्रत्यर्प्य [illegible] हि [illegible] ॥ १० ॥

इत्थं निवेद्य कुपितेन तदग्रजेन
निष्कासितोऽम्बुधिमतीत्य ततोऽपरक्तः ।
आक्रन्दति स्म सचिवैः स दिविष्ठ उच्चै-
रापन्नबन्धुमभयाय रघुप्रवीरम् ॥ ११ ॥

आकर्ण्य तत्करुणवेदितमार्तबन्धुः
शङ्काकुलेऽपि मतिविक्रमवान्कपीन्द्रे ।
पर्यग्रहीत्स्वजनवाह्निकुसोदरं स
नोच्चेर्हृदा स्वपरधीः शरणं प्रपन्ने ॥ १२ ॥

लङ्काधिपत्यमधिगत्य ततः कनीयान्
रक्षोधिपो रिपुवधे निशितं निवेद्य ।

आराधनाय वरुणस्य तरीतुमब्धिं
 रामस्य दर्भशयनीयमकल्पयत्सः ॥ १३ ॥

तत्र त्रिरात्रमविधेये प्रतिपाल्य बाणै-
 स्तम्भत्वमादररुषा क्षुभितं पयोधिम् ।
अभ्याजगाम वरुणः शरणं शरण्यं
 दण्डो हि साधकतमः स्तिमितान्विनेतुम् ॥ १४ ॥

तस्मिन्प्रसाद्य कुपितं गमनेऽप्युपाय-
 मुक्त्वा प्रचेतसि गतेऽथ कपिर्नलाख्यः ।
सेतुं बबन्ध जलधौ प्लवगोपनीतैः
 पारिप्लवैर्वरबलेन नगैर्विशालम् ॥ १५ ॥

तद्वर्त्मनाद्भुततमेन विभुः समुद्रं
 तीर्त्वा सुवेलकटके बहुपानभोज्ये ।
सेनां निवेश्य महतीं स यथोपजोष-
 मासांबभूव दिविषद्गणगीतकीर्तिः ॥ १६ ॥

जिज्ञासया परबलस्य दशास्यमुक्ता-
 वादाय वानरतनुं शिबिरे चरन्तौ ।
मायाचणौ निशिचरौ सचिवैर्निगृह्य
 रामान्तिकं स तु विभीषण आनिनाय ॥ १७ ॥

तावाशरौ कपिकुलैर्भृशमर्द्यमाना-
 वुन्मुच्य दर्शितबलौ विभुना विमुक्तौ ।
स्वस्वामिनो धुरि शशंसतुरानृशंस्यं
 रामस्य दुःसहतरं कपिविक्रमं च ॥ १८ ॥

चारौ परस्तवपरौ शुकसारणौ तौ
निर्भर्त्स्य राक्षसपतिस्त्ववरुह्य सौधात् ।
मायाविनां प्रथममादिशति स्म विद्यु-
ज्जिह्वं शठश्छलयितुं जनकेन्द्रपुत्रीम् ॥ १९ ॥

सोऽपीन्दुवक्त्रमरुणान्तकटाक्षमीष-
च्चूडामणिप्रवरशोभिशिखाकलापम् ।
मायी विलूनमिव रामशिरः प्रदर्श्य
देवीममूमुहदनन्यगतिं भृशार्ताम् ॥ २० ॥

शोकाप्लुता सरमया हितया सख्या
मायेयमाशरकृतेत्युपपादयन्त्या ।
सा जानकी स्वयमभूदुपनीततापा
वृष्ट्या यथा वसुमती मिहिराभितप्ता ॥ २१ ॥

मातामहः पलभुजां हितकृन्मनीषी
तं माल्यवान् रहसि रावणमाह वृद्धः ।
यः संधिविग्रहविधिं विधिवद्विवित्ते
शास्ति स्वयं वसुमतीं स महेन्द्रधर्मा ॥ २२ ॥

क्वेमौ नरौ क्व कपयः क्व पुनः पुरीयं
दग्धैकमर्कटकणेन सुतो हतस्ते ।
भ्राता च तेऽतिबलवान्परपक्षसेवी
क्षिप्ताः शिलाश्च हरिभिर्जलधौ प्लवन्ते ॥ २३ ॥

मन्ये तदद्य नियतिस्त्वयि तात वामा
नालं सुरैरपि बलादतिवर्तितुं सा ।

नारी परत्रहृदया च न पुष्कलोऽर्थो
विद्राव्य तां सुखय वत्स चिरायुरस्मान् ॥ २४ ॥
वृद्धप्रलाप इति तन्मतिमप्यपास्य
लङ्केश्वरः पुरि चतुर्ष्वपि गोपुरेषु ।
रक्षां विधाय महता बलवद्गुणेन
प्राज्ञागरीत्कलुषितो बलिनोऽभियोगात् ॥ २५ ॥
व्यूढां सुवेलकटके पृतनां प्रधानै-
र्गुप्तां दृढं विदधता कपिपुङ्गवेन ।
रामोऽधिरुह्य शिखरं रिपुराजधानी-
मैक्षिष्ट चाक्षुषमहोदयराजधानीम् ॥ २६ ॥
उद्वीक्ष्य गोपुरगतं कपिराड् दशास्यं
दिष्ट्यासि धूर्त मम दृक्पथ आततायिन् ।
आः पातकिस्तव पिनष्म्यधुनेति चेतः-
संपातवानपतदस्य शिरःस्वमर्षात् ॥ २७ ॥
अन्योन्यघट्टनविकर्षणमुष्टिकुट्ट-
प्रोत्क्षेपभञ्जनचपेटतलप्रहारैः ।
भूमौ निपात्य सहसाङ्घ्रियप्रहारकौ तौ
द्वन्द्वं वितेनतुरुभौ कपिराक्षसेन्द्रौ ॥ २८ ॥
तं रामवध्यमवधार्य स वञ्चयित्वा
प्रत्यागतः कपिवरो विभुनानुशिष्टः ।
नैतत्समञ्जसमितश्च तथा न कार्यं
मित्र त्वया न किमपि त्वदृते ममेति ॥ २९ ॥
जिज्ञासुना रिपुमतं रघुनायकेन
मुक्तोऽथ वालितनयः प्रविलङ्घ्य सालम् ।

आसाद्य रावणमकार्यनिविष्टबुद्धिं
प्राज्ञो गभीरमवदद्धितमप्रियं च ॥ ३० ॥
चीर्णं तपश्चिरतरं चरिताश्च धर्मा
विद्याः कृता अधिगतं महदीश्वरत्वम् ।
नीचाशयो निखिलमेकपदे निहंसि
क्लेशाय केवलममीषु परिश्रमस्ते ॥ ३१ ॥
मन्येऽनुमोक्ष्यस इमां रघुराजपत्नीं
सिंहीमलर्क इव वच्मि वयस्यभावात् ।
तामर्पयाशु तव मूर्धसु कङ्कपत्री
श्यामज्वलन्मुखरिता निपतेन्न यावत् ॥ ३२ ॥
अग्निर्दहेद्दुरुपसर्पणमेव सा तु
सर्वात्मनेत्युपदिशन्कुपितस्य तस्य ।
योधान्स्वनिग्रहपरान्स निनाय देवं
वैवस्वतं पितृपतिं च मतिं पितृव्यम् ॥ ३३ ॥
संग्रामप्रमदजुषामथोऽभ्ययेषां
संनाहोद्भटभटकोटि(?)मानाः ।
स्वच्छन्दं पटुपटहा हरिस्तु सुप्तान्
हर्यक्षानपि लघु बोधयांबभूवुः ॥ ३४ ॥
आधून्वत्पटरथकेतुदण्डदम्भा-
दाहूताः समरभुवा करैरिव स्वैः ।
आतङ्काद्भुतभयकौतुकप्रमोदै-
रातेनुर्दिवि निबिडस्थितिं निलिम्पाः ॥ ३५ ॥
क्षुन्दानाः खरनखदन्तकुन्तमुष्टि-
प्रासादिप्रहरणभिन्नमूलदेशान् ।

प्राकारान् गिरितरुभिश्च पूरयन्तो
    दुर्गाणि प्रविविशुरोजसा कपीन्द्राः ॥ ३६ ॥
क्षोणीध्रान्क्षिपत रथान्प्रभङ्क्त पत्तीन्
    वश्वानां प्रहरत हास्तिकाश्च पिंष्ट ।
योधांश्च क्षपयत वानरप्रवीराः
    स्वच्छन्दं निशिचरवाहिनीं ममन्थुः ॥ ३७ ॥
भग्नं स्वं बलमखिलं प्रहस्तमुख्यं
    विज्ञाय प्रकुपित इन्द्रजिन्निशीथे ।
आसारैर्द्रुततरमाशरः समृणा-
    मातेने कपिकुलमाकुलं सनीलम् ॥ ३८ ॥
उत्पाट्य क्षितिरुहमुन्नतं कराभ्यां
    विक्रम्यानिलगतिरङ्गदः प्रसह्य ।
प्रध्वस्तप्रधियुगकूबराक्षयुग्यं
    संक्षुण्णं व्यतनुत शात्रवं शताङ्गम् ॥ ३९ ॥
उज्झित्वा रथमथ मायया विलीनो
    मेघेषु प्रथितबलः स मेघनादः ।
कीशौघं भुवि निखिलेन शाययित्वा
    नागास्त्रैर्दशरथनन्दनावभान्त्सीत् ॥ ४० ॥
तौ बद्धौ भुजगशरैर्दृढं विचेष्टौ
    निःसंज्ञौ भुवि पतितौ यदा तदेदम् ।
त्रैलोक्यं व्यथितमपेतसत्त्वमासी-
    त्क्षेत्रज्ञव्यपगमने यथैव चैत्यम् ॥ ४१ ॥
संत्रस्ता रणभुवमेत्य तत्र सीता
    संदृष्टाशरपातिनीतपुष्पकेण ।

तौ दृष्ट्वा स्वयमपि दुर्मनायमाना
मैथिल्याबहह मुहुर्मुहुर्ममज्ज ॥ ४२ ॥
सौवर्णाचलरुचिरप्रभः सुपर्ण-
स्त्रय्यात्मा त्रिदशवरध्वजोऽहिशत्रुः ।
विस्तारस्थगितदिगन्तपक्षवात-
व्याधूताद्रिरसनबन्ध आविरासीत् ॥ ४३ ॥
पाणिभ्यां वपुषि परामृशञ्छिवाभ्यां
संरूढव्रणसुदृढाङ्गकौ विधाय ।
आश्वास्य प्रियवचनैर्नरेन्द्रपुत्रौ
तार्क्ष्योऽगात्पुनरपि नित्यमङ्गलात्मा ॥ ४४ ॥
विध्वस्ते विषधरशस्त्रजोपसर्गे
वैदेह्या अशुभमुचा शुचा सहैव ।
उत्तस्थुः पुनरपि वानराः प्रहर्तुं
शत्रूणां हृदयविकम्पनैर्निनादैः ॥ ४५ ॥
संमर्दे दिनकरपुत्रयोधवर्गैः
संचूर्णीकृततनवो निशाटवीराः ।
सूर्यस्य प्रतिकृतिकाम्ययेव बिम्बं
भिन्दाना दिवमथ सहस्रशः प्रयाताः ॥ ४६ ॥
धूम्राक्षं कपिभिरकम्पनप्रहस्तौ
द्वाःस्थास्तान्युधि निहतान्सवज्रदंष्ट्रान् ।
आकर्ण्य क्षुभितमतिः स्वयं महत्या
वाहिन्या समरमवाप राक्षसेन्द्रः ॥ ४७ ॥
आगच्छन्दशवदनः स्ववक्त्रसंख्या-
संघर्षादिव पिदधद्दिशो दशास्त्रैः ।

मन्थानाचल इव सागरं कपीनां
संक्रुद्धो बलमतिविह्वलं व्यतानीत् ॥ ४८ ॥
सुग्रीवाङ्गदनलनीलमुख्यवीरान्
कृत्वासौ निशितशरैः स्वतूणभूतान् ।
संघट्टे दृढतरमुष्टिरक्षशत्रुं
संरब्धो व्यतनुत घूर्णमानमङ्गैः ॥ ४९ ॥
सौमित्रिं निजशितशक्तिवेधमूढं
नोद्धर्तुं धृतगिरिरप्यसौ शशाक ।
तां विश्वंभरभरधारणेऽप्यसीव
द्रोणां स्वां प्रकृतिमुपेयिवांसमन्तः ॥ ५० ॥
आश्वस्य श्वसनसुतेन वज्रकल्पं
मुष्टिं वै विरचयता हतः स्तनान्ते ।
स्रोतोभी रुधिरमसृक्प्रसार्वभौमः
सिन्दूरद्रवमिव धातुमानवर्षीत् ॥ ५१ ॥
अस्वस्थं स्वयमपनीय जन्यभूमे-
रारामानां लघुमथ लक्ष्मणं हनूमान् ।
उल्लाघं सपदि विधाय तं युयुत्सो
रामस्य द्रुततरमान्तिकं बभाज ॥ ५२ ॥
सोऽप्येवं तरलितकीशयूथनाथं
विश्रान्तं पुनरभियान्तमाहवाय ।
संक्रुद्धः पवनसुतं रथं वितन्व-
नूर्जस्वी प्रतियुयुधे रिपुं तरस्वी ॥ ५३ ॥
तौ दृष्ट्वा दृढतरकार्मुकौ कृतास्त्रौ
सामर्षौ शरनिकरान्मिथः किरन्तौ ।

आक्रन्दक्षमभुजविक्रमौ त्रिलोक्या
  द्वैधोढं हृदयमभूदवेक्षकाणाम् ॥ ९४ ॥
अस्त्राणि प्रतिरथसंहितानि सद्यः
  प्रत्यस्त्रैः समुपशमय्य लाघवेन ।
विध्यन्तौ स्वयमरिमन्तरान्तरा ता-
  वन्योन्याद्भुततममाहवं व्यधत्ताम् ॥ ९५ ॥
नाराचैरथ रथसूतवाहतूणी-
  चापोरश्छदमकुटान्यरेर्विभिन्दन् ।
ऐक्ष्वाको निजभुजशेषमात्तगन्धं
  मन्दाक्षव्यतिकरविह्वलाक्षमूचे ॥ ९६ ॥
मा भैषीर्निशिचर विक्लवं विशस्त्रं
  नो हन्यां यदपि भवादृगाशु वध्यः ।
श्वस्त्वायन्नुपकरणैः पुनः समग्रो
  द्रष्टासि त्वदरिबलं युयुत्ससे चेत् ॥ ९७ ॥
सावज्ञं बलवदरातिनैवमुक्त्वा
  निर्मुक्तो मृगपतिनेव गन्धहस्ती ।
रक्षोराड् भवनगतो दुरन्तचिन्ता-
  संतानव्यथितमना न शर्म लेभे ॥ ९८ ॥
संदंशार्पितमिव रामकामबाण-
  व्यालेलान्तरममुमभ्रुवन्नमात्याः ।
प्रागल्भ्यं शमयतु देव कुम्भकर्णो
  बाधं सा चरममुपस्थिता स्वयं त्वाम् ॥ ९९ ॥
मत्वा तद्धितमनुजं महान्धकारे
  निद्राख्ये पतितमबोधयद्भटैः सः ।

उद्बुद्धः स च नितरामनर्थमूले
कामाख्ये दशमुखमग्रजं हितोक्त्या ॥ १० ॥
प्रक्रम्य प्रसभमवीक्ष्य चानुबन्धं
पश्चाद्यो विमृशति तत्फले प्रसक्ते ।
मन्दात्मा स्वकृतमवाप्य जीवनाशं
नश्येद्वै सपदि स कर्कटीव गर्भात् ॥ ११ ॥
शीलस्थां परगृहिणीं हरन्नकामां
स्वायत्तं हितमनुजं प्रियं निरस्यन् ।
त्वन्नाथं बलमुपहारयंश्च मृत्योः
प्राज्ञस्त्वं किमिति न बुद्ध्यसेऽपनीतिम् ॥ १२ ॥
न श्रेयः कथमपि पारदारिकाणा-
मित्यत्र त्वमिह निदर्शनाय मा भूः ।
उक्त्वैवं कुपितमवेक्ष्य राक्षसेन्द्रं
सर्वं ते हतमिति जन्यमाविवेश ॥ १३ ॥
तेनैके युधि निहताश्च पादघातं
निष्पिष्टाः कतिचन तत्र चूर्णपेषम् ।
संभग्नाः क्वचिदपरे मृणालभङ्गं
शेषाश्चाप्यपगमितास्ततः कपीन्द्राः ॥ १४ ॥
धावन्तो दिशि दिशि तत्र वीक्ष्य शैलान्
भीतास्ते भृशमिव कुम्भकर्णबुद्ध्या ।
व्यावृत्ताः पुनरपि तं विलोक्य साक्षा-
द्दोलास्था इव कपयश्चिरं विचेलुः ॥ १५ ॥
तैर्भूयोऽङ्गदवचसोद्यता गिरीन्द्राः
संघट्टं तदुरसि वज्रसार एत्य ।

चूर्णत्वं सपदि गता बलाधिकेन
व्यावृण्वन् किल सहयुध्वनो विपत्तिम् ॥ ६६ ॥
आच्छिद्य ग्रहणगते गते स्वनासां
सुग्रीवे रघुपतिना चिरं स युद्ध्वा
तां निद्रामतिदयितां सुदीर्घदीर्घां
दुर्बोधां पुनरयति स्म कुम्भकर्णः ॥ ६७ ॥
तद्विज्ञाय व्यथितमनसो राक्षसेन्द्रस्य पुत्रा
वीर्योत्सिक्ताः समरसरणिं प्राप्य देवान्तकाद्याः ।
चत्वारस्ते पवनजमुखैः स्थामम‍क्षस्य नीता
भ्रातृस्नेहादिव विरहितां पञ्चतामञ्जसेयुः ॥ ६८ ॥
आश्वास्यार्तं पितरमनलं तर्पयित्वाभिचारे
लीनो मेघे कपिपरिवृढाञ्शातयन्बाणवर्षैः ।
ब्रह्मास्त्रेण त्रिजगदगदंकारवीरौ विहिंसन्
काकुत्स्थौ च स्वपुरमगमद्धृष्टधीर्मेघनादः ॥ ६९॥ ॥
ओषध्यद्रौ पवनजहृते वानराणां हतानां
नाजीवन्कोऽप्यथ पलभुजां तत्र नैकोऽपि जीवन् ।
ते यत्क्षिप्ताः सपदि जलधौ ये हता यातुधाना
भाग्यायत्ता ह्यपि मतिमतां धीरुदर्कानुरूपा ॥ ७० ॥
स्वस्थैः पश्चान्निशि कपिभटैरुल्कयोद्दीप्य लङ्कां
नीतेष्वद्धा पितृपतिपुरं षट्सु कुम्भादिकेषु ।
रामश्चक्रे युधि खरसुतं तत्समीपोपयातं
विद्वान्को वान्यथयति पितापुत्रविश्लेषदुःखम् ॥ ७१ ॥
भूयश्छन्ने व्यथयति रिपौ लक्ष्मणोऽथ त्रिलोकीं
नीरक्षस्कां कलयितुमना राघवेण न्यषेधि ।

इत्येकस्मिन्नहनि बहवोऽनागसो नैव वध्या
जातौ किं धीगुणविमुखगा सज्जते सज्जनानाम् ॥ ७२
सोऽपक्रान्तो धुरि हनुमतो मायया दर्शयित्वा
मूर्ध्नि च्छिन्नामिव जनकजां मोहयित्वा च सर्वान् ।
प्रक्रम्येष्टिं जगदघकरीं तां पितृव्योपरुद्धां
मुक्त्वा योद्धुं रणभुवमगादिन्द्रजिल्लक्ष्मणेन ॥ ७३ ॥

शस्त्राशस्त्रिप्रथनतुमुले संप्रहारेऽथ तस्मि-
स्तावस्यन्तौ निशितनिशितैराशुगैराशु तूर्णैः ।
दृष्ट्वा दृष्ट्वा दिवि दिविषदः स्वात्मनोऽभूतपूर्वं
चापाम्नाये चतुरवयवे मेनिरेऽभ्यासलाभम् ॥ ७४ ॥
मन्त्रैरन्यैः शमयितुमरिं लक्ष्मणोऽशक्नुवन्सन्
प्रायुङ्क्तास्त्रं सह रघुपतेर्नाममन्त्रेण यर्हि ।
तर्ह्येवाभूच्छतमखरिपुर्नाममात्रावशेषो
मन्त्रोऽयं हि श्रुतिशतमहामन्त्रराट्सार्वभौमः ॥ ७५ ॥
तादृक्पुत्रव्यसनकलुषं विह्वलं राक्षसेन्द्रं
क्रोधावेशाज्जनकतनयां तन्निदानं जिघांसुम् ।
सर्वार्थानां वरमपगमो नाथ लब्धप्रणाशा-
दित्युक्त्या तं प्रकृतिमनयत्तस्य मन्त्री सुपार्श्वः ॥ ७६
सर्वं मौलं बलमुपहरन्नाहवायावशेषं
गेहे गेहे क्लिपयन्नगिरा राक्षसीनां वितुन्नः ।
रक्षोराजो युधि रिपुमदानक्षमाम्वीक्ष्य रुष्टः
कीशाधीशानतनुत शरासारवर्षी भृशार्तान् ॥ ७७ ॥
शक्त्या विद्धं निशिचरपतिक्षिप्तयापन्नमूर्च्छं
सौमित्रिं प्रागनिलतनयो यान्सुषेणोपदेशात् ।

आनीयाद्रिं पुनरपि निधिं सिद्धदिव्यौषधीनां
स्वस्थं चक्रे बलमपि मुदाश्लिष्टमाश्लिष्टकर्मा ॥ ७८ ॥
साहाय्यार्थं त्रिदशपतिना प्रेषिते मातलीये
पूर्णे सर्वैस्तदुपकरणैर्दीप्यमाने शताङ्गे ।
रामं दृष्ट्वा समरदयितं कङ्कटामुक्तदेहं
देवाः साक्षादमृतकलहे दैत्यचक्रोरधीषुः ॥ ७९ ॥
तावारूढौ रथमतिरथौ मण्डलानि भ्रमन्तौ
स्पर्धायोगेऽप्यतिशयितया शिक्षया दोष्मतोऽरेः ।
धन्यंमन्यौ बहुमतवधूहारपुत्रव्यपाया—
वातेनाते रणमनुपमं राघवो रावणश्च ॥ ८० ॥
नावाद्वायुस्तरणिरघृणिर्निह्नुतो वह्निरासी—
च्छक्रश्चक्रभ्रममुपगतो वीतकृत्यश्च मृत्युः ।
विष्टब्धोऽभूद्विधिरवमृशन्विष्टपस्य प्रतिष्ठां
सर्वं त्रस्तं समजनि तयोः संपराये प्रवृद्धे ॥ ८१ ॥
शस्त्राघाते तरलितमतिर्वाहितोऽन्यत्र यन्त्रा
लब्धाश्वासो यदपसरणं कारितं मे त्वयाद्य ।
अन्याय्यं वै तदिति तमधिक्षिप्य तेनानुनीतः
क्रुद्धोन्मत्तो निशिचरपतिर्भूय एवाजिमापत् ॥ ८२ ॥
तत्रागस्त्यः समरशिरसि श्रान्तिचिन्तोपगूढं
दृष्ट्वा रामं पुनरपि युधे रावणं चापतन्तम् ।
अभ्येत्यास्मै सवितृहृदयं सिद्धिदं सद्य एव
श्रुत्वा गीतं विधिवददिशत्पावनं दिव्यमन्त्रम् ॥ ८३
तल्लाभेन ज्वलितवपुषं द्विड्विरामे च रामं
हेलामात्रात्त्रिदशपरिषद्द्रावणं रावणं च ।

तौ संरब्धौ चकितचकितं वीक्ष्य कीशाः पलाशाः
सर्वेऽप्यासन्गलितमनसो देहमात्रेण शेषाः ॥ ८४ ॥
यद्यच्छिन्नं दशमुखशिरः संगरे दृष्टवीर्यै-
र्बाणैस्तत्तत्सदृशमपरं तत्क्षणेन प्ररूढम् ।
एवं चैकोत्तरशतमधः पातयित्वा शिरांसि
श्रान्तो नान्तं यदयमगमद्राघवो नाप्युपायम् ॥ ८५ ॥
सूतेनाथो निपुणमतिना स्मारितो ब्राह्ममस्त्रं
गृह्णंश्चापे समधित विभुः प्रागगस्त्येन दत्तम् ।
वाजे वायुर्वसति च फले यस्य भास्वत्कृशानू
यद्वै पूर्वं भुवनगुरुणा निर्मितं वासवार्थम् ॥ ८६ ॥
तत्संधाने व्यचलदचला साटवी साचला च
ज्योतिश्चक्रं सह वसतिभिर्धिष्ण्यपानामफालीत् ।
वारां राशिः क्वथितसलिलो वाहिनीभिर्व्यशुष्य-
दूष्मोष्मभ्यां विततमचिरादस्तमागात्समस्तम् ॥ ८७ ॥
उद्घुष्योच्चैरशनिसदृशं तन्निसृष्टं महास्त्रं
व्योमाभूमी अविरलतया व्याप्य वेगेन गत्वा ।
आशासाने सुरमुनिगणे स्वस्ति गोब्राह्मणेभ्यो
वक्षः शत्रोरदयमभिदत्पापसंकल्पदुष्टम् ॥ ८८ ॥
भित्त्वा चास्मिन्प्रविशति पुनः स्वीयतूणीनिवासं
मुक्तारावे त्रिभुवनरिपौ वीरशय्यां प्रपन्ने ।
धीरोदात्तः किमपि सुमहत्कर्म कृत्वा सुराणां
रेजे धन्वी समिति विजयश्रीसखो वीररामः ॥ ८९ ॥
चक्रे दिव्या रघुपतिवपुर्वासितं पुष्पवृष्टिः
कीर्तिस्तस्य त्वखिलभुवनं वासितं पावितं च ।

आशीस्तस्मिन्कतिनि मरुतां यौनरक्ष्यं मतासी-
  द्दैत्यज्यान्ता वितरतितरामाशिषो यत्प्रसादः ॥ ९० ॥
शान्तं शय्यामथ शरमयीं प्रापितं वीक्ष्य शूरं
  भ्रातृस्नेहाद्व्यचलपदनुजो रावणस्याकुलाक्षः ।
मन्ये भ्रातर्विधिरतितरां सर्वतो वै बलीया-
  न्कः श्रद्दध्यात्तव गतिमिमां शौर्यराशेऽन्यथा चेत् ९१
धातुर्वंश्यो धनदसहजः शासिता देवतानां
  लङ्काध्यक्षः श्रुतिषु कुशलस्तापसश्चासि धीमन् ।
तादृक्त्वं चेत्स्वयमगणयन्गृध्नुरन्यस्य दारा-
  न्दैवादन्यं कमिह भुवने किं नु वोपालभेय ॥ ९२ ॥
स ह्येको नः सहज सहजस्नेहवान्कुम्भकर्णो
  यन्नात्याक्षीदहमिव झटित्युत्पथस्थं भवन्तम् ।
नाप्यद्राक्षीद्विपदमपदे कारितां वा तवेमां
  धिङ्मामात्मंभरिमपनयं दुःखमूलं कुलस्य ॥ ९३ ॥
आक्रुश्यैवं बहु स विभुनाश्वासितो नैव शोच्या
  वीरश्रेष्ठा इति तदनु तत्संस्क्रियां याचमानः ।
लेभेऽनुज्ञां न खलु मरणादूर्ध्वमप्यास्ति वैरं
  कुर्वन्त्येष्टिं निशिचरपतेरग्रजस्येति तस्मात् ॥ ९४ ॥
ज्येष्ठा भर्तुर्विदितनिधना राक्षसेन्द्रस्य भार्या
  स्त्रीणां सङ्घैः सह रणमहीमेत्य मन्दोदरीति ।
भिन्नोरस्कं भुवि ततभुजं तं समाश्लिष्य गाढं
  दुःखोत्कत्वात्कृपणकरुणं वीरपत्नी व्यलापीत् ॥ ९५
शेषे वश्यां श्रियमपि कथं मामिवोपेक्षमाणः
  किं न त्याज्यं व्यवसितमिति प्रत्यनीकं गतोऽसि ।

यद्भूपुत्रीं क्षितिपदयितां काङ्क्षितामध्यविन्द-
न्गाढाश्लिष्टः प्रसभमवनीं तत्प्रसूं तत्प्रियां च ॥ ९६ ॥
यत्प्राणेशो रजतगिरिधृग्यत्सुतः शक्रजेता
यत्सौन्दर्यं भुवनतिलकं पुष्पकं यद्विहारः ।
सा केदेवं गतिमुपगता सर्वशोच्यामकस्मा-
दुच्चैरन्यैः किमिह विभवैर्यत्र मुह्यन्ति बुधाः ॥ ९७ ॥
धर्मे स्थित्वा मृतिरपि वरं नान्यथा सर्वसिद्धि-
र्नैवंवादी तव हिततमः स तु दृष्टा सखैका ।
यस्या नीतिः सपदि फलिता मद्वचःसेवनेन यद्वा
हेतुर्विप्रा मिषति विषये मत्कृतान्ते दुरन्ते ॥ ९८ ॥
न त्वं नष्टो यदपि सकलं सैन्यमुन्मूल्य शत्रो-
र्वीरश्लाघ्यां व्रजसि पदवीं न्यस्तदण्डैकसाध्याम् ।
नष्टेकाहं हतपतिसुता सर्वनाशं प्रपन्ना
हा हा भिन्ना किमिह करवै हा प्रियेत्याप मूर्च्छाम् ९९
आश्वास्यैनां तदनु विधिवत्तं च संस्कृत्य वह्नौ
लङ्काराज्ये विभुवचनतो लक्ष्मणेनाभिषिक्तः ।
आप्तैर्मित्रैः सह परिजनै राक्षसेन्द्रः कनीयान्
भक्त्या नीचैरनमदचिरं तस्य सम्यक् कृतज्ञः ॥ १०० ॥
शुद्धां देवीं चिरविरहितां दर्शनोत्सुक्यपूर्णां
रक्षःस्त्रीभिर्दशमुखगृहात्सोपचारं प्रणीताम् ।
संवर्तोद्यद्दहनसदृशो निर्दिधक्षन्निवाक्ष्णा
प्रेक्ष्यैक्ष्वाकः सदसि महति व्याजहारेऽतिरूक्षम् १०१
नार्थः कश्चिज्जनकतनये विद्यते मे भवत्या
गृह्णीयात्कः परगृहगतां कामदग्धोऽपि भार्याम् ।

यतस्त्वीदृग्रिपुपरिभवोच्छित्तये न त्वदर्थं
भद्रे रामस्त्वयि तु विमुखो याहि यत्राभिलाषः १०२
श्रुत्वा सा चाश्रुतचरमिदं भर्तृवाक्यं विरूपं
प्रस्विन्नाङ्गी मुकुलितमुखी साश्रुदग्धगुद्धकण्ठा ।
संस्तभ्यान्तः कथमपि शुचं प्राह किं नार्यपुत्रो
जानीते मां स्वपदमतिकां सर्वभावेन शुद्धाम् १०३
गात्रस्पर्शः प्रसभहरणे राक्षसेन्द्रस्य योऽभू-
त्तत्रोपायं कलयतु जनो दुर्बलः किं नु वायम् ।
इत्युक्त्वा सा स्वपतिहृदयं वीक्ष्य वह्नौ विशोध्य
स्वं चारित्रं प्रथयितुमनाः प्राविशद्धव्यवाहम् ॥ १०४
तत्रायाता विधिहरमुखा अस्तुवन्निर्जराद्यै-
प्राहुर्हेतुं यमखिलजगज्जन्मभङ्गस्थितीनाम् ।
स त्वं विष्णुर्दशरथसुतो भूभरध्वस्तयेऽभूः
सीता लक्ष्मीर्न वहसि शुभां किं न्वविद्वानिवेति १०५
पातिव्रत्यज्वलितवपुषं तां समर्प्याथ तस्मा
इत्यूचेऽग्निस्तव दयितया सर्वभुक् शोधितोऽस्मि ।
पित्राश्लिष्टो हरिहयवरात्सर्वमुज्जीव्य सैन्यं
सीतारामः स्वपुरमनुगैः पुष्पकेण प्रतस्थे ॥ १०६ ॥
गच्छन् रामः समरपदवीं सागरं सेतुबन्धं
किष्किन्धादीनपि च विषयान्दर्शयित्वा प्रियायै ।
भारद्वाजाश्रमपदगतो याह्ययोध्यां हनूमन्
पूर्णः कालो व्यथितमनुजं जीवयेत्यादिदेश ॥ १०७॥
भ्रातुर्भक्त्या व्रतकृशतनुश्चीरवासा जटालो
वारं वारं मनसि भरतश्चिन्तयंस्तादिनानि ।

प्रत्यासन्नेऽहनि हनुमता श्राविते तस्य वृत्ते
ब्रह्मानन्दादयमविकलं संमदं संप्रपेदे ॥ १०८ ॥
भूयः श्रुत्वा विपिनचरितं विस्तरेणातितुष्टः
सर्वं भृत्यैर्झटिति नगरं कारयित्वोत्सवाढ्यम् ।
सोत्कण्ठाभिः प्रकृतिभिरयं ज्येष्ठसंदर्शनार्थी
नन्दिग्रामादभिमुखमगाद्यत्र रामस्य पन्थाः ॥ १०९ ॥
औत्सुक्यादनिमेषपुल्लनयने प्राच्यन्मुखाम्भोरुहे
कृत्स्ने प्राञ्जलिमूर्धनि नागरजने साशोककोलाहले ।
रामः पुष्पकतोऽवरुह्य भरतं चालिङ्ग्य लेभे मुदं
यां नास्याः कलया पुनर्जनकजालाभोद्भवासीत्समा ११०
अन्योन्यं च यथोपचारमखिलेष्वभ्यर्चितेषु क्रमा-
द्याने वैश्रवणस्य वासभवनं प्रस्थापिते पुष्पके ।
आराच्चिरभाजमार्यमसकृन्नत्वा प्रसाद्यादरा-
ल्लोकैकेयीतनयो न्यवेदयदिदं सर्वेषु शुश्रूषुषु ॥ १११ ॥
माता मेऽग्रज पूजिता तव गिरा गुर्व्या धुरोर्व्या भृशं
भुग्नग्रीवमिमं न पश्यसि जनं न्यासं प्रतीच्छाधुना ।
नो चेत्त्वज्जनने पितुश्च वितथं व्यर्थः प्रयासो भवे-
दित्युक्तस्तव पूरयाम्यभिमतं वत्सेति रामोऽब्रवीत् ११२
संशोध्याथ जटा महार्हवसनो राजोपबर्होज्ज्वलः
प्राप्य स्वं नगरं महोत्सवयुतं संसेव्यमानोऽनुजैः ।
इक्ष्वाकुप्रमुखैर्महेन्द्रसदृशैरध्यासितं राजभिः
प्रत्युप्तं मणिकाञ्चनादिभिरलंचक्रे स सिंहासनम् ११३
तीर्थैः पुण्यतमैर्वलीमुखहृतैः सर्वौषधीनां रसैः
संपृक्तैश्च सुवर्णकुम्भभरितैर्मन्त्रोत्तमैः संस्कृतैः ।

ऋत्विग्भिर्भगवान्समेत्य सचिवैश्चान्यैर्वसिष्ठो मुनिः
श्रीरामं सहसीतमासनगतं राज्येऽभ्यषिञ्चद्विभुम् ॥ ११४ ॥
दृष्ट्वा रत्नकिरीटशोभितमुखं श्वेतातपत्रादिकै-
रैन्द्र्या चामिलनीतयातिरुचिरं तं वैजयन्त्या स्रजा ।
देव्यालंकृतवामपार्श्वमधिपं देदीप्यमानं श्रिया
चक्षुष्मत्त्वफलं समग्रमधुना लब्धं प्रजा मेनिरे ॥ ११५ ॥
गन्धर्वा मुदिता जगुः प्रननृतुः स्वर्वारनारीजनाः
सिद्धाः साध्यगणैः समं मुखरयामासुर्महातोद्यकम् ।
अस्वप्ना ववृषुः सुमानि परया भक्त्यर्षयस्तुष्टुवु-
र्लोकानन्दकरे शिवाप्तिकृत्त्सवे रामाभिषेकोत्सवे ११६
सुग्रीवे च विभीषणे च विधिवत्संमान्य निर्मुक्तयो-
र्यातेष्वप्युपचारपूर्वमितरेष्वभ्यागतेषु क्रमात् ।
श्रीरामः स्वयमाचरन्स्वविहितान्याचारसंज्ञापरा-
न्सर्वं पालयति स्म भूपमिकतो धर्मप्रतिष्ठापकः ॥ ११७ ॥
आदित्यानलविप्रवृद्धविदुषः प्रातः शुचिः सेवते
मध्याह्ने सचिवैः समेत्य कुरुते सम्यक् प्रजानां हितम्
वैदेहीकुचकुम्भसंभ्रमपरीरम्भं निशास्वीहते
सर्वत्रैव हि धर्ममेव मनुते मूलं फलं च प्रभुः ॥ ११८ ॥
न व्याधिर्न जराभयं न पलितं नाकालमृत्योर्भयं
न व्यालीयभयं न चेतिजभयं न क्षुत्पिपासाभयम् ।
नान्यस्माच्च भयं बभूव महतः क्षुद्राच्च वा भावतः
सर्वं निर्भयमेव नित्यमुदितं रामे जगन्नायके ॥ ११९ ॥
न स्वैरी भुवनत्रयेऽपि च कुतः स्यात्स्वैरिणीनां कथा
न स्तेनो न च कूटवाङ्न च शठो नानाहिताग्निर्जनः ।

निष्कामा अभवन्स्वधर्मनिरताः सर्वे च वर्णाश्रमाः
पातिव्रत्यपराः स्त्रियश्च सुभगाः सीतायशःकामुकाः ॥
काले वर्षति वासवः क्रतुभुजो नित्यं हविर्भागिनो
भूमिः सर्वसमृद्धिभाग्द्विजवरा ब्राह्मया श्रिया भास्वराः ।
गावः कामदुघा नृपा नयपरा रत्नाकरो वारिधिः
सर्वं चर्धतमं बभूव भुवने रामे जगन्नायके ॥ १२१ ॥
शास्त्रे धर्मविनिश्चये वितरणे सत्ये क्षमायां शुचौ
कारुण्ये विनये नये च धनुषि प्रागल्भ्यगाम्भीर्ययोः
अन्यस्मिन्नपि यत्र कुत्र च गुणाख्याने हि सर्वात्मना
रामो राम इति श्रुतिः क्षितितले सार्वत्रिकी पप्रथे १२२
क्रीडाताडितताटकः शिवधनुर्भङ्क्ता मुनेः शासिता
भ्रात्रे न्यासितपादुकः खररिपुर्वाल्यन्तकः सेतुकृत् ।
संख्ये रावणकुम्भकर्णनिधनप्रोच्चण्डदोर्विक्रमो
रामो दाशरथिर्जगत्त्रयपतिः सीतापतिर्मे गतिः १२३
लीलामानुषविग्रहे परतरे रामाभिधे श्रीपतौ
चेतोवृत्त्यनुवृत्तये कृतमिदं संक्षिप्तरामायणम् ।
आचन्द्रार्कमियं कृतिर्विजयतां सीतापतेराज्ञया
तन्नामस्मरणं हि सर्वजगतां सद्यः परं मङ्गलम् १२४

इति श्रीमुद्दुसुब्बकविविरचिते संक्षिप्तरामायणे
युद्धकाण्डः
समाप्तश्चायं ग्रन्थः
ॐ तत्सत्



